गुणोंमें श्रेष्ठ, योगदायक २०० योग्या, ज्ञानमूर्तिका विकाश करनेवाली, सावित्री, कमला, लक्ष्मी, श्री, अनन्तके हृदयमें स्थित ॥ ४४ ॥ कमलके स्थानवाली, शुभ्र, योगनिद्रा, २१० सुदर्शना, सरस्वती, सर्वविद्या, जगज्ज्येष्ठा, सुमङ्गला ॥ ४५ ॥ वासवी, वरदाता, वाच्या, सब अर्थ साधनेवाली २२० वागीश्वरी, सर्वविद्या, महाविद्या, सुशोभना ॥ ४६ ॥ गुह्यविद्या, आत्मविद्या, सर्वविद्या, आत्मभाविता,



गुणाढ्या योगदा २०० योग्या ज्ञानमूर्तिर्विकाशिनी ॥ सावित्री कमला लक्ष्मीः श्रीरनंतोरसि स्थिता ॥ ४४ ॥ सरोजनिलया शुभ्रा योगनिद्रा २१० सुदर्शना ॥ सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमंगला ॥ ४५ ॥ वासवी वरदा वाच्या कीर्तिः सर्वार्थसाधिका २२० ॥ वागीश्वरी सर्वविद्या महाविद्या सुशोभना ॥ ४६ ॥ गुह्यविद्यात्मविद्या च सर्वविद्यात्मभाविता ॥ स्वाहा विश्वंभरी २३० सिद्धिः स्वधा मेधा धृतिः श्रुतिः ॥ ४७ ॥ नाभिः सुनाभिः सुकृतिर्माधवी नरवाहिनी २४० ॥ पूज्या विभावरी सौम्या भगिनी भोगदायिनी ॥ ४८ ॥ शोभा वंशकरी लीला मानिनी परमेष्ठिनी २५० ॥ त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी ॥ ४९ ॥ महानुभावमध्यस्था महामहिषमर्दिनी ॥ पद्ममाला पापहरा विचित्रमुकुटानना ॥ ५० ॥

स्वाहा, विश्वम्भरी, २३० सिद्धि, स्वधा, मेधा, धृति, श्रुति ॥ ४७ ॥ नाभि, सुनाभि, सुकृति, माधवी, नरवाहिनी २४० पूज्या, विभावरी, सौम्या, भगिनी, भोग देनेवाली ॥ ४८ ॥ शोभा, वंशकरी, लीला, मानिनी, परमेष्ठिनी २५० त्रैलोक्यसुन्दरी, रम्या, सुन्दरी, कामचारिणी, ॥ ४९ ॥ महानुभावके मध्यमें स्थित होनेवाली, महामहिषकी मारनेवाली, पद्ममाला, पापकी हरनेवाली, विचित्र मुकुट मुखवाली ॥ ५० ॥

कान्ता २६० चित्र अम्बर धारण करनेवाली, हंसनामक आकाशम स्थानवाली, जगत्की सृष्टि बढानेवाली ॥ ५१ ॥ निर्यंत्रा, मंत्रके बाहर स्थित, नंदिनी, भद्रकालिका, आदित्यवर्णा २७० कौमारी, श्रेष्ठ मोरपर चढनेवाली ॥ ५२ ॥ वृषके आसनपर स्थित, गौरी, महाकाली देवताओंसे अर्चित, अदिति, नियता, रौद्री, पद्मगर्भा २८० विवाहना ॥ ५३ ॥ विरूपाक्षी, जिह्वासे होठ चाटनेवाली, महा असुरोंकी,

कांता २६० चित्राम्बरधरा दिव्याभरणभूषिता ॥ हंसाख्या व्योमनिलया जगत्सृष्टिविवर्द्धिनी ॥ ५१ ॥ निर्यंत्रा मन्त्रवाहस्था नंदिनी भद्रकालिका ॥ आदित्यवर्णा २७० कौमारी मयूरवरवाहिनी ॥ ५२ ॥ वृषासनगता गौरी महाकाली सुरार्चिता ॥ अदितिर्नियता रौद्री पद्मगर्भा २८० विवाहना ॥ ५३ ॥ विरूपाक्षी लेलिहाना महासुरविनाशिनी ॥ महाफलानवद्यांगी कामपूरा विभावरी ॥ ५४ ॥ विचित्ररत्नमुकुटा प्रणतार्द्धिविवर्द्धिनी २९० ॥ कौशिकी कर्षिणी रात्रिस्त्रिदशार्त्तिविनाशिनी ॥ ५५ ॥ विरूपा च सुरूपा च भीमा मोक्षप्रदायिनी ॥ भक्तार्त्तिनाशिनी भव्या ३०० भवभावविनाशिनी ॥ ५६ ॥ निर्गुणा नित्यविभवा निःसारा निरपत्रपा ॥ यशस्विनी सामगीतिर्भवांगनिलयालया ॥ ५७ ॥

नाश करनेवाली, कामफला, निन्दारहित अंगवाली, कामपूरा, विभावरी ॥ ५४ ॥ विचित्र मुकुटवाली, भक्तोंकी ऋद्धि बढानेवाली, २९० कौशिकी, कर्षिणी, रात्रि, देवताओंके दुःख नाश करनेवाली ॥५५॥ विरूपा, सुरूपा, भीमा, मोक्षदाता भक्तोंके दुःख नाशक, भव्या ३०० भवभावविनाशिनी ॥ ५६ ॥ निर्गुणा, नित्यविभववाली, निःसारा, निरपत्रपा ( लज्जारहित ), यशस्विनी, सामगीति, भवांगनिलयालया ॥ ५७ ॥

दीक्षा ३१० विद्याधरी, दीप्ता, महेन्द्रनिपातिनी, सबसे अधिक विद्या, सब शक्तिकी देनेवाली ॥ ५८ ॥ सर्वेश्वरकी प्रिया, तार्क्षी, समुद्रके अन्तरमें निवास करनेवाली, कलंकरहित, निराधारा ३२० नित्यसिद्धा, निरामया ॥ ५९ ॥ कामधेनु, वेदगर्भा, धीमती, मोहनाशिनी, निःसंकल्पा, निरातंका, विनयप्रदा ३३० ॥ ६० ॥ ज्वालामालासहस्राढ्या, देवदेवी, मनोन्मनी, उर्वी, गुर्वी, श्रेष्ठा, षड्गुणात्मिका ॥ ६१ ॥

दीक्षा ३१० विद्याधरी दीप्ता महेंद्रविनिपातिनी ॥ सर्वातिशायिनी विद्या सर्वशक्तिप्रदायिनी ॥५८॥ सर्वेश्वरप्रिया तार्क्षी समुद्रान्तरवासिनी ॥ अकलंका निराधारा ३२० नित्यसिद्धा निरामया ॥५९॥कामधेनुर्वेदगर्भा धीमती मोहनाशिनी ॥ निःसंकल्पा निरातंका विनया विनयप्रदा ३३० ॥६०॥ ज्वालामालासहस्राढ्या देवदेवी मनोन्मनी ॥ उर्वी गुर्वी गुरुः श्रेष्ठा सगुणा षड्गुणात्मिका ॥ ६१ ॥ महाभगवती ३४० भव्या वसुदेवसमुद्भवा ॥ महेंद्रोपेंद्रभगिनी भक्तिगम्यपरायणा॥६२॥ज्ञानज्ञेया जरातीता वेदांतविषया गतिः ॥ दक्षिणा ३५० दहना बाह्या सर्वभूतनमस्कृता ॥६३॥ योगमाया विभावज्ञा महामोहा महीयसी ॥ सत्या सर्वसमुद्भूतिर्ब्रह्मवृक्षाश्रया ३६० मतिः ॥ ६४ ॥ बीजांकुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥ ख्यातिः प्रतिज्ञा चित्संविन्महायोगेंद्रशायिनी ॥ ६५ ॥

महाभगवती ३४० भव्या, वसुदेवसमुद्भवा, महेन्द्रोपेंद्रभगिनी, भक्तिगम्यपरायणा ॥ ६२ ॥ ज्ञानज्ञेया, जरातीता, वेदान्तविषया, गति, दक्षिणा, ३५० दहना, बाह्या सर्व भूतसे नमस्कृत ॥ ६३ ॥ योगमायाका विभाव जाननेवाली, सत्या, सबकी उत्पन्न करनेवाली, ब्रह्मवृक्षकी आश्रय करनेवाली, ३६० मति ॥ ६४ ॥ बीज अंकुरकी उत्पत्तिका कारण, महाशक्ति, महामती, ख्याति, प्रतिज्ञा, चित्संवित्, महायोगे

न्द्रशायिनी ॥ ६५ ॥ विकृति, ३७० शांकरी, शास्त्री, गन्धर्वा, यक्षसे सेवित, वैश्वानरी, महाशाला, देवसेना, गुहप्रिया ॥ ६६ ॥ महारात्रि, शिवानंदा, शची ३८० दुःस्वप्ननाशिनी, पूज्या, अपूज्या, जगद्धात्री, दुर्विज्ञेयस्वरूपिणी ॥ ६७ ॥ गुहाम्बिका, गुहोत्पत्ति, महापीठा, मरुत्सुता, हव्यवाहान्तरा ३९० गार्गी, हव्यवाहसमुद्भवा ॥ ६८ ॥ जगत्की योनि, जगत्की मृत्यु और जराका अतिक्रमण करनेवाली,

विकृतिः ३७० शांकरी शास्त्री गंधर्वा यक्षसेविता ॥ वैश्वानरी महाशाला देवसेना गुहप्रिया ॥ ६६ ॥ महारात्री शिवानंदा शची ३८० दुःस्वप्ननाशिनी ॥ पूज्याऽपूज्या जगद्धात्री दुर्विज्ञेयस्वरूपिणी ॥६७॥ गुहांबिका गुहोत्पत्तिर्महापीठा मरुत्सुता ॥ हव्यवाहांतरा ३९० गार्गी हव्यवाहसमुद्भवा ॥ ६८ ॥ जगद्योनिर्जगन्माता जगन्मृत्युर्जरातिगा ॥ बुद्धिर्माता बुद्धिमती पुरुषांतरवासिनी ४०० ॥ ६९ ॥ तपस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥ सर्वेन्द्रियमनोमाता सर्वभूतहृदि स्थिता ॥७०॥ संसारतारिणी विद्या ब्रह्मवादिमनोलया ॥ ब्रह्माणी बृहती ४१० ब्राह्मी ब्रह्मभूता भयावनिः ॥७१॥ हिरण्मयी महारात्रिः संसारपरिवर्तिका ॥ सुमालिनी सुरूपा च तारिणी भाविनी ४२० प्रभा ॥ ७२ ॥

बुद्धि, माता, बुद्धिमती, पुरुषान्तरवासिनी ४०० ॥ ६९ ॥ तपस्विनी, समाधिमें स्थित, त्रिनेत्रा, स्वर्गमें स्थित, सम्पूर्ण इन्द्रिय और मनकी माता, सब भूतोंके हृदयमें स्थित ॥ ७० ॥ संसारसे तारनेवाली, विद्या, ब्रह्मवादिनी, मनोलया, ब्रह्माणी, बृहती, ४१० ब्राह्मी, ब्रह्मभूता, भयावनी ॥ ७१ ॥ हिरण्मयी, महारात्रि, संसारका परिवर्तन करनेवाली, सुमालिनी, सुरूपा, तारिणी, भाविनी ४२० प्रभा ॥ ७२ ॥

 उन्मीलनी, सर्वसहा, सब प्रत्ययकी साक्षिणी, तपिनी, तापिनी, विश्वा, भोगदा, धारिणी, धरा ४३० ॥ ७३ ॥ सुसौम्या, चन्द्रवदना, तांडवमें 
प्रसन्न मनवाली, सत्त्वशुद्धिकरी, शुद्धि, तीनों मलका नाश करनेवाली ॥ ७४ ॥ जगत्प्रिया, जगत्की मूर्ति, त्रिमूर्ति, अमृताश्रया ४४० निरा 
॥ ८३ ॥ श्रया, निराहारा, निरंकुशा, रणोद्भवा ॥ ७५ ॥ चक्रहस्ता, विचित्रांगी, स्रग्विणी, पद्मधारिणी, परा, परविधानकी जाननेवाली, महापुरुषोंसेभी

उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ॥ तपिनी तापिनी विश्वा भोगदा धारिणी धरा ४३० ॥७३॥ सुसौम्या चंद्रवदना तांडवा
सक्तमानसा ॥ सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी ॥ ७४ ॥ जगत्प्रिया जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया ४४० ॥ निराश्रया नि
राहारा निरंकुशरणोद्भवा ॥७५॥ चक्रहस्ता विचित्रांगी स्रग्विणी पद्मधारिणी॥परापरविधानज्ञा महापुरुषपूर्वजा ॥ ७६ ॥ विद्येश्व
रप्रिया४५०ऽविद्या विद्युज्जिह्वा जितश्रमा ॥ विद्यामयी सहस्राक्षी सहस्रश्रवणात्मजा॥७७॥सहस्ररश्मिपद्मस्था महेश्वरपदाश्रया ॥
ज्वालिनी ४६० सद्मना व्याप्ता तैजसी पद्मरोधिका॥७८॥महादेवाश्रया मान्या महादेवमनोरमा ॥ व्योमलक्ष्मीः सिंहरथा चेकिता
न्यमितप्रभा ४७० ॥ ७९ ॥ विश्वेश्वरी विमानस्था विशोका शोकनाशिनी ॥ अनाहता कुण्डलिनी नलिनी पद्मवासिनी॥८०॥

पूर्व होनेवाली ॥ ७६ ॥ विश्वेश्वरप्रिया, ४५० अविद्या, विद्युजिह्वा, श्रमरहिता, विद्यामयी, सहस्राक्षी, सहस्र श्रवणकी आत्मजा ॥ ७७ ॥ सहस्र
रश्मि, पद्मस्था, महेश्वरपदाश्रया, ज्वालिनी ४६० पद्म करके व्याप्त, तैजसी, पद्मरोधिका ॥ ७८ ॥ महादेवके आश्रयवाली, मान्या, महादेवके ॥ ८३ ॥
मनको रमानेवाली, व्योमलक्ष्मी, सिंहरथा, चेकितानी, अमितप्रभा ॥ ४७० ॥ ७९ ॥ विश्वकी स्वामिनी, विमानमें स्थित, विशोका, शोकना

शिनी, अनाहता, कुण्डलिनी, नालिनी, पद्मवासिनी ॥ ८० ॥ शतानन्दा, सत्पुरुषोंकी कीर्ति ४८० सब भूतोंके आशयमें स्थित, वाग्देवता, ब्रह्मकला, कलातीता, कलावती ॥ ८१ ॥ ब्रह्मर्षि, ब्रह्महृदया, ब्रह्मा विष्णु शिवकी प्यारी, व्योमशक्ति, क्रियाशक्ति ४९० जनशक्ति, परमगति ॥ ८२ ॥ क्षोभिका, रौद्रिका, भेद्या, भेद अभेदसे वर्जित, अभिन्न, भिन्नसंस्थावाली, वंशिनी, वंशहारिणी ५०० ॥८३॥

शतानन्दा सतां कीर्तिः ४८० सर्वभूताशयस्थिता ॥ वाग्देवता ब्रह्मकला कलातीता कलावती ॥ ८१ ॥ ब्रह्मर्षिर्ब्रह्महृदया ब्रह्म विष्णुशिवप्रिया ॥ व्योमशक्तिः क्रियाशक्ति ४९० र्जनशक्तिः परागतिः ॥ ८२ ॥ क्षोभिका रौद्रिका भेद्या भेदाभेदविवर्जिता ॥ अभिन्ना भिन्नसंस्थाना वंशिनी वंशहारिणी ५०० ॥ ८३ ॥ गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ॥ भगिनी भगवत्पत्नी सकला कालकारिणी ॥८४॥ सर्ववित्सर्वतोभद्रा ५१० गुह्यातीता गुहावलिः ॥ प्रक्रिया योगमाता च गंधा विश्वेश्वरेश्वरी ॥८५॥ कपिला कपिलाकांता कनकाभा कलांतरा ५२० ॥ पुण्या पुष्करिणी भोक्त्री पुरंदरपुरःसरा ॥ ८६ ॥ पोषणी परमैश्वर्यभूतिदा भूतिभूषणा ॥ पंचब्रह्मसमुत्पत्तिः परमात्मात्मविग्रहा ॥ ८७ ॥

गुह्यशक्ति, गुणातीता, सर्वदा, सर्वतोमुखी, भगिनी, भगवत्पत्नी, सकला, कालकारिणी ॥ ८४ ॥ सबकी जाननेवाली, सब ओरसे मंगल दायक ५१० गुह्यसे अतीत, गुहावलि, प्रक्रिया, योगमाता, गन्धा, विश्वेश्वरेश्वरी ॥८५॥ कपिला, कपिलाकान्ता, कनकाभा, कलान्तरा ५२० पुण्या, पुष्करिणी, भोक्त्री, पुरन्दरपुरस्सरा ॥ ८६ ॥ पोषणी, परमैश्वर्य विभूतिकी देनेवाली, भूषणा, पञ्च ब्रह्मसे उत्पन्न होनेवाली, परमात्मा,

॥ ८४ ॥

आत्मविग्रहा ॥ ८७ ॥ नर्मोदया ५३०, भानुमती, योगिज्ञेया, मनोजवा, बीजरूपा, वशिनी, योगरूपिणी ॥ ८८ ॥ सुमन्त्रा, मंत्रिणी, पूर्णा५४०ह्लादिनी, क्लेशनाशिनी, मनोहरि, मनोरक्षी, तापसी, वेदरूपिणी ॥८९॥ वेदशक्ति, वेदमाता, वेदविद्याकी प्रकाश करनेवाली, योगेश्वरोंकी ईश्वरी ५५०, माला, महाशक्ति, मनोमयी ॥ ९० ॥ विश्वावस्था, वीरमुक्ति, विद्युन्माला, विहायसी, पीवरी, सुरभी—वन्धा ५६०, नन्दिनी,





नर्मोदया ५३० भानुमती योगिज्ञेया मनोजवा ॥ बीजरूपा रजोरूपा वशिनी योगरूपिणी ॥ ८८ ॥ सुमंत्रा मंत्रिणी पूर्णा ५४० ह्लादिनी क्लेशनाशिनी ॥ मनोहरिर्मनोरक्षी तापसी वेदरूपिणी ॥ ८९ ॥ वेदशक्तिर्वेदमाता वेदविद्या प्रकाशिनी ॥ योगेश्वरेश्वरी ५५० माला महाशक्तिर्मनोमयी ॥ ९० ॥ विश्वावस्था वीरमुक्तिर्विद्युन्माला विहायसी ॥ पीवरी सुरभी वंद्या ५६० नंदिनी नन्दवल्लभा ॥ ९१ ॥ भारती परमानन्दा परापरविभेदिका ॥ सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ॥९२॥ अचिंत्या ऽचिंत्यमहिमा ५७० दुर्लेखा कनकप्रभा ॥ कूष्मांडी धनरत्नाढ्या सुगन्धा गंधदायिनी ॥९३॥ त्रिविक्रमपदोद्भूता धनुष्पाणिः शिरोहया ॥ सुदुर्लभा ५८० धनाध्यक्षा धन्या पिंगललोचना ॥ ९४ ॥

नन्दवल्लभा ॥ ९१ ॥ भारती, परमानन्दा, पर अपरके भेदवाली, सब प्रहरणोंसे युक्त, काम्या, कामेश्वरेश्वरी ॥ ९२ ॥ अचिन्त्या, अचिंत्यमहिमा ॥ ५७० ॥ दुर्लेखा,कनकप्रभा, कूष्माण्डी, धनरत्नोंसे युक्त, सुगन्धा, गन्धदायिनी ॥ ९३ ॥ त्रिविक्रमके पदसे उद्भूत धनुष्पाणि

शिरोहया, सुदुर्लभा ५८० धनाध्यक्षा, धन्या, पिंगलोचना ॥ ९४ ॥ भ्रान्ति, प्रभावती, दीप्ति, पंकजायतलोचना, आद्या, हृदयकमलसे उत्पन्न, परामाता ५९० रणप्रिया ॥ ९५ ॥ सत्क्रिया, गिरिजा, नित्यशुद्धा, पुष्पनिरंतरा, दुर्गा, कात्यायनी, चण्डी, चर्चिका, शांतविग्रहा ६००॥९६॥ हिरण्यवर्णवाली, रजनी, जगत्के मंत्र करनेवाली, मंदर पर्वतपर निवास करनेवाली, शारदा, स्वर्णमालिनी ॥९७॥ रत्नमाला, रत्नगर्भा, पृथ्वी,

भ्रांतिः प्रभावती दीप्तिः पंकजायतलोचना ॥ आद्या हृत्कमलोद्भूता परा माता ५९० रणप्रिया ॥९५॥ सत्क्रिया गिरिजा नित्यशुद्धा पुष्पनिरंतरा ॥ दुर्गा कात्यायनी चंडी चर्चिका शांतविग्रहा ६०० ॥ ९६ ॥ हिरण्यवर्णा रजनी जगन्मंत्रप्रवर्तिका ॥ मंदराद्रिनिवासा च शारदा स्वर्णमालिनी॥९७॥रत्नमाला रत्नगर्भा पृथ्वी विश्वप्रमाथिनी ६१०॥ पद्मासना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा ॥ ९८ ॥ धुन्वती दुष्प्रकंपा च सूर्यमाता दृषद्वती ॥ महेंद्रभगिनी माया ६२० वरेण्या वरदर्पिता ॥ ९९ ॥ कल्याणी कमला रामा पञ्चभूतवरप्रदा ॥ वाच्या वरेश्वरी नन्द्या दुर्जया ६३० दुरतिक्रमा ॥१००॥ कालरात्रिर्महावेगा वीरभद्रहितप्रिया॥भद्रकाली जगन्माता भक्तानां भद्रदायिनी ॥ १०१ ॥

विश्वप्रमाथिनी ६१० पद्मासना, पद्मनिभा, नित्यतुष्टा, अमृतोद्भवा ॥ ९८ ॥ धुन्वती, दुष्प्रकंपा, सूर्यमाता, दृषद्वती, महेन्द्रभगिनी, माया ६२० वरेण्या, वरसे दर्पित ॥९९॥ कल्याणी, कमला, रामा, पञ्चभूतोंको वरकी देनेवाली, वाच्या, वरेश्वरी, नन्द्या, दुर्जया ६३० दुरतिक्रमा॥१००॥ कालरात्रि, महावेगा, वीरभद्रहिताप्रिया, भद्रकाली, जगत्की माता, भक्तोंको आनन्द देनेवाली ॥ १०१ ॥

कराला, पिंगलाकारवाली, नामवेदा ६४० महानदा, तपस्विनी, यशोदा, यथाध्वपरिवर्तिनी ॥१०२॥ शंखिनी, पद्मिनी, सांख्या सांख्ययोगकी प्रवृत्त करनेवाली, चैत्री, संवत्सरा ६५० रुद्रा जगत्संपूरणी, इन्द्रजा ॥ १०३ ॥ शुंभारि, खेचारि, आकाशमें स्थित होनेवाली, कम्बुग्रीवा, कलिप्रिया, खरध्वजा, खरारूढा, ६६० पराध्यी, परमालिनी,॥१०४॥ ऐश्वर्यरत्नके स्थानवाली, विरक्ता, गरुडके आसनवाली, जयन्ती, हृद्गुहा, रम्या

कराला पिंगलाकारा नामवेदा ६४० महानदा ॥ तपस्विनी यशोदा च यथाध्वपरिवर्तिनी ॥१०२॥ शंखिनी पद्मिनी सांख्या सांख्ययोगप्रवर्तिका ॥ चैत्री संवत्सरा ६५० रुद्रा जगत्संपूरणीन्द्रजा ॥१०३॥ शुंभारिः खेचरी खस्था कंबुग्रीवा कलिप्रिया ॥ खरध्वजा खरारूढा ६६० पराध्यां परमालिनी॥१०४॥ऐश्वर्यरत्ननिलया विरक्ता गरुडासना ॥ जयंती हृद्गुहा रम्या सत्त्ववेगा गणाग्रणीः ॥ १०५ ॥ संकल्पसिद्धा ६७० साम्यस्था सर्वविज्ञानदायिनी ॥ कलिकल्मषहंत्री च गुह्योपनिषदुत्तमा ॥१०६॥ नित्यदृष्टिः स्मृतिर्व्याप्तिः पुष्टिस्तुष्टिः ६८० क्रियावती ॥ विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवामृता ॥१०७॥ लोहिता सर्वमाता च भीषणा वनमालिनी ६९० ॥ अनन्तशयनाऽनाद्या नरनारायणोद्भवा ॥ १०८ ॥

सत्त्वके वेगवाली, गणोंमें अग्रणी ॥ १०५ ॥ संकल्पसिद्धा ६७० साम्यमें स्थित, सब विज्ञानकी देनेवाली, कलिकल्मषकी नाश करनेवाली गुह्योपनिषद्रूप, उत्तमा ॥ १०६ ॥ नित्यदृष्टि, स्मृति, व्याप्ति, पुष्टि, तुष्टि ६८० क्रियावती, विश्वा, अमरपतियोंकी, ईश्वरी, भुक्ति, मुक्ति, शिवा, अमृता, ॥ १०७ ॥ लोहिता, सर्वमाता, भीषणा, वनमालिनी ६९० अनन्तशयना, अनाद्या, नरनारायणोद्भवा ॥ १०८ ॥

नृसिंही, दैत्यमथनी, शंख चक्र गदा धारिणी, संकर्षणसमुत्पत्ति, अम्बिका, समीपमें निवास करनेवाली ॥ १०९ ॥ महाज्वाला, महामूर्ति ७००, सुमूर्ति सब काम देनेवाली, सुप्रभा, अत्यन्त गौरी, धर्म काम अर्थ मोक्षकी देनेवाली ॥ ११० ॥ भौंके मध्यमें स्थानवाली, अपूर्वा, प्रधानपुरुषा, बली, महाविभूतिकी देनेवाली ७१०, मध्या, कमलनेत्रासना ॥ १११ ॥ अठारह भुजावाली, नाट्या, नीले कमलकी समान कांतिवाली, सब शक्तिद्वारा

नृसिंही दैत्यमथिनी शंखचक्रगदाधरा ॥ संकर्षणसमुत्पत्तिरंबिकोपांतसंश्रया ॥ १०९ ॥ महाज्वाला महामूर्तिः ७०० सुमूर्तिः सर्वकामधुक् ॥ सुप्रभा सुतरां गौरी धर्मकामार्थमोक्षदा ॥ ११० ॥ भ्रूमध्यनिलयाऽपूर्वा प्रधानपुरुषा बली ॥ महाविभूतिदा ७१० मध्या सरोजनयनासना ॥ १११ ॥ अष्टादशभुजा नाट्या नीलोत्पलदलप्रभा ॥ सर्वशक्त्या समारूढा धर्माधर्मानुवर्जिता ॥ ११२ ॥ वैराग्यज्ञाननिरता निरालोका ७२० निरिंद्रिया ॥ विचित्रगहना धीरा शाश्वतस्थानवासिनी ॥ ११३ ॥ स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी ॥ अशेषदेवतामूर्तिर्देवतापरदेवता ७३० ॥ ११४ ॥ गणात्मिका गिरेः पुत्री निशुंभविनिपातिनी ॥ अवर्णा वर्णरहिता निर्वर्णा बीजसम्भवा ॥ ११५ ॥

समारूढ, धर्म, अधर्मसे वर्जित ॥ ११२ ॥ वैराग्य ज्ञानमें निरत, निरालोका ७२०, निरिन्द्रिया, विचित्रगहना, धीरजवाली, शाश्वतस्थानमें निवास करनेवाली ॥ ११३ ॥ स्थानेश्वरी, निरानन्दा, त्रिशूलश्रेष्ठ धारण करनेवाली, सम्पूर्ण देवताओंकी मूर्ति, देवता, परदेवता, स्वरूप ७३० ॥ ११४ ॥ गणात्मिका, पर्वतराजपुत्री, निशुंभकी नाश करनेवाली, अवर्णा, वर्णसे रहित, निर्वाणा, बीजसंभवा ॥ ११५ ॥

अनन्तवर्णा, अनन्यमें स्थितिवाली, शंकरी ७४०, शान्त मनवाली, अगोत्रा,गोमती, रक्षा करनेवाली, गुह्यरूपा, गुणान्तरा ॥११६॥ गोश्री, गौके पदार्थ घृत दुग्धकी प्यार करनेवाली, गौरी, गणेश्वरसे नमस्कृत, सत्यमात्रावाली ७५० सत्यसन्धा,तीनों सन्ध्या और संधिसे रहित ॥११७॥ सर्व वादके आश्रयवाली, सांख्ययुक्त, सांख्ययोग द्वारा प्रगट होनेवाली, अनन्ता, प्रमाके अयोग्य, शून्या, शुद्धकुलमें प्रगट होनेवाली ७६० ॥ ११८॥

अनन्तवर्णाऽनन्यस्था शंकरी ७४० शान्तमानसा ॥ अगोत्रा गोमती गोप्त्री गुह्यरूपा गुणान्तरा ॥ ११६ ॥ गोश्रीर्गव्यप्रिया गौरी गणेश्वरनमस्कृता ॥ सत्यमात्रा ७५० सत्यसन्धा त्रिसंध्या संधिवर्जिता ॥ ११७ ॥ सर्ववादाश्रया सांख्या सांख्ययोगसमुद्भवा ॥ असंख्येयाऽप्रमेयाख्या शून्या शुद्धकुलोद्भवा ७६० ॥ ११८॥ बिंदुनादसमुत्पत्तिः शंभुवामा शशिप्रभा ॥ विसंगा भेदरहिता मनोज्ञा मधुसूदनी ॥ ११९ ॥ महाश्रीः श्रीसमुत्पत्ति ७७० स्तमःपारे प्रतिष्ठिता ॥ त्रितत्त्वमाता त्रिविधा सुसूक्ष्मपदसंश्रया ॥ १२० ॥ शांत्यतीता मलातीता निर्विकारा निराश्रया ॥ शिवाख्या चित्रनिलया ७८० शिवज्ञानस्वरूपिणी ॥ १२१ ॥ दैत्यदानवनिर्मात्री काश्यपी कालकर्णिका ॥ शास्त्रयोनिः क्रियामूर्तिश्चतुर्वर्गप्रदर्शिका ॥ १२२ ॥

बिन्दुनादसे प्रगट होनेवाली, शम्भुकी वामा, चन्द्रमाकी समान कान्तिवाली, संगवर्जित, भेदरहित, मनोहरा, मधुसूदनी, ॥ ११९ ॥ महाश्री, लक्ष्मीकी प्रगट करनेवाली ७७० तमके परपारमें स्थिति करनेवाली, तीन तत्त्वोंकी माता, त्रिविधा, सूक्ष्मपदमें स्थिति करनेवाली ॥ १२० ॥ शान्त्यतीता, मलसे परे, निर्विकारा, निराश्रया, शिवा, चित्रनिलया ७८० शिवके ज्ञानकी स्वरूपवाली ॥ १२१ ॥ दैत्यदानवकी

निर्माण करनेवाली, काश्यपी, कालकर्णिका, शास्त्रयोनि, क्रियाकी मूर्ति, चार वर्ग ( धर्म अर्थ काम मोक्ष ) की दिखानेवाली ॥ १२२ ॥ नारायणी, नवीन उद्भववाली, कौमुदी ७९० लिंगधारिणी, कामुकी, ललिता, तारा, परापरके ऐश्वर्यकी देनेवाली ॥ १२३ ॥ महामहिमावाली, वडवा, वामलोचना, सुभद्रा, देवकी ८०० सीता, वेदवेदांगकी पार जानेवाली ॥ १२४ ॥ मनस्विनी, मन्युमाता,महाक्रोधमें होनेवाली, मृत्यु

नारायणी नवोद्भूता कौमुदी ७९० लिंगधारिणी ॥ कामुकी ललिता तारा परापरविभूतिदा ॥ १२३ ॥ परांतजातमहिमा वडवा वामलोचना ॥ सुभद्रा देवकी ८०० सीता वेदवेदांगपारगा ॥ १२४ ॥ मनस्विनी मन्युमाता महामन्युसमुद्भवा ॥ अमृत्युरमृतास्वादा पुरुहूता पुरुप्लुता ॥ १२५ ॥ अशोच्या ८१० भिन्नविषया हिरण्यरजतप्रिया ॥ हिरण्या राजती हैमी हेमाभरणभूषिता ॥ १२६ ॥ विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा ॥ महानिद्रा ८२० समुद्भूतिर्बलींद्रा सत्यदेवता ॥ १२७ ॥ दीर्घाककुद्मिनी विद्या शांतिदा शांतिवर्द्धिनी ॥ लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्तिका ॥ १२८ ॥

रहित, अमृतके आस्वादवाली, पुरुहूता, पुरुप्लुता ॥ १२५ ॥ शोचरहिता ८१०, भिन्न विषयवाली, सोने चांदीको प्यार करनेवाली, सुवर्ण चांदी हेमरूपवाली, सुवर्णके गहनोंसे युक्त ॥ १२६ ॥ विशेषकर शोभायमान, जाननेमें न आनेवाली, ज्योतिष्टोम यज्ञका फल देनेवाली, महानिद्रा ८२० समुद्भववाली, बलियोंमें श्रेष्ठ, सत्यदेवतायुक्त ॥ १२७ ॥ दीर्घिका, ककुद्मिनी, विद्या, शान्ति देनेवाली, शान्तिकी बढानेवाली,

लक्ष्मीआदि शक्तिकी उत्पन्न करनेवाली, शक्तिचक्रको प्रवृत्त करनेवाली ॥ १२८ ॥ तीनों शक्तिकी उत्पन्न कर्त्री ८३० जन्या, कामक्रोधादि छः ऊर्मियोंसे वर्जित, स्वाहा, कर्मकी करनेवाली, युगान्तदलन करनेवाली ॥ १२९ ॥ संकर्षण करनेवाली, जगत्की माता, कामयोनि, किरीट धारण किये, ऐन्द्रीशक्ति ८४० त्रिलोकीसे नमस्कृत, वैष्णवी, परमेश्वरी ॥ १३० ॥ प्रद्युम्नप्रिया, दान्ता, युग्मदृष्टिवाली, त्रिलोचना, महा

त्रिशक्तिजननी ८३० जन्या षडूर्मिपरिवर्जिता ॥ स्वाहा च कर्मकरणी युगांतदलनात्मिका ॥ १२९ ॥ संकर्षणा जगद्धात्री कामयोनिः किरीटिनी ॥ ऐंद्री ८४० त्रैलोक्यनमिता वैष्णवी परमेश्वरी ॥ १३० ॥ प्रद्युम्नदयिता दांता युग्मदृष्टिस्त्रिलोचना ॥ महोत्कटा हंसगतिः प्रचण्डा ८५० चण्डविक्रमा ॥ १३१ ॥ वृषावेशा वियन्मात्रा विंध्यपर्वतवासिनी ॥ हिमवन्मेरुनिलया कैलासगिरिवासिनी ॥ १३२ ॥ चाणूरहन्त्री तनया नीतिज्ञा कामरूपिणी ८६० ॥ वेदविद्या व्रतरता धर्मशीलाऽनिलाशना ॥१३३॥ अयोध्यानिलया वीरा महाकालसमुद्भवा ॥ विद्याधरक्रिया सिद्धा विद्याधरनिराकृतिः ॥ १३४ ॥

उत्कटा, हंसगामिनी, प्रचण्डा ८५० ॥ तीक्ष्ण पराक्रमवाली ॥ १३१ ॥ वृषमें आवेशवाली, आकाशकी मात्रा, विन्ध्यपर्वतमें निवास करनेवाली, हिमालय और मेरुमें निवास करनेवाली, तथा कैलासमें रहनेवाली ॥ १३२ ॥ चाणूरकी मारनेवाली, तनया, नीतिकी जाननेवाली, कामरूपिणी ८६०, वेदविद्याव्रतमें रत, धर्मशीला, अनिलका भोजन करनेवाली ॥ १३३ ॥ अयोध्यामें निवास करनेवाली, वीरा, महाकालकी प्रगट

करनेवाली, विद्याधरप्रिया, विद्याधरकी निराकृत करनेवाली ॥ १३४ ॥ तृप्ति करनेवाली ८७० वहन करनेवाली, पावनी, पोषणी, खिला, मातृका, मन्मथसे उद्‌भूत, जलसे प्रगट होनेवाली, वाहनप्रिया ॥ १३५ ॥ करीषिणी, स्वधा, वाणी ८८०, वीणा बजानेमें तत्पर, सेविता, सेविका, सेवा, सिनीवाली ( अमारूप ), गरुत्मती ॥ १३६ ॥ अरुन्धती, हिरण्याक्षी, मणिदाता, श्री, वसु, ( धन ) की देनेवाली

आप्यायन्ती ८७० वहंती च पावनी पोषणी खिला ॥ मातृका मन्मथोद्भूता वारिजा वाहनप्रिया ॥ १३५ ॥ करीषिणी स्वधा वाणी ८८० वीणावादनतत्परा ॥ सेविता सेविका सेवा सिनीवाली गरुत्मती ॥ १३६ ॥ अरुंधती हिरण्याक्षी मणिदा श्रीवसुप्रदा ८९० ॥ वसुमती वसोर्धारा वसुंधरासमुद्भवा ॥ १३७ ॥ वरारोहा वरार्हा च वपुःसङ्गसमुद्भवा ॥ श्रीफली श्रीमती श्रीशा श्रीनिवासा ९०० हरिप्रिया ॥१३८॥ श्रीधरी श्रीकरी कंपा श्रीधरा ईशवीरणी ॥ अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया ९१० ॥ १३९ ॥ निहंत्री दैत्यासिंहानां सिंहिका सिंहवाहिनी ॥ सुसेना चन्द्रनिलया सुकीर्तिश्छिन्नसंशया ॥ १४०॥

८९० वसुमती, वसोर्धारा, वसुन्धरासे प्रगट होनेवाली ॥ १३७ ॥ सुमुखी, श्रेष्ठ योग्यतायुक्त, शरीरके संगसे होनेवाली, श्रीफली, श्रीमती, श्रीशा, श्रीनिवासा ९०० हरिकी प्रिया ॥ १३८ ॥ श्रीधरी, श्री करनेवाली, कम्पा, श्रीधारणकरनेवाली, ईशवीरणी, अनन्त दृष्टि, क्षुद्रतारहित, धात्रीशा, धनदकी प्रिया ९१० ॥ १३९ ॥ महादैत्योंकी मारनेवाली, सिंहिका रूप, सिंहपर चढनेवाली, सुन्दरसेनावाली,

चन्द्रमें स्थानवाली, सुन्दर कीर्तिवाली, सन्देहरहित ॥ १४० ॥ बलकी जाननेवाली, बलकी, देनेवाली, वामा ९२०, जिह्वा चाटनेवाली, अमृत प्रगट करनेवाली, नित्य सदयरूप, स्वयंज्योति, उत्सुका, अमृतजीवनी ॥ १४१ ॥ वज्रकी समान डाढोंवाली, वज्रजिह्वावाली, वैदेही, वज्रकी समान शरीरवाली ९३०, मंगलरूपपिणी, मंगला, माला, मलिना, मलकी हरनेवाली ॥ १४२ ॥ गान्धर्वी, गारुडी, चान्द्री, कम्ब

बलज्ञा बलदा वामा ९२० लेलिहानाऽमृताश्रवा ॥ नित्योदिता स्वयंज्योतिरुत्सुकाऽमृतजीविनी ॥ १४१ ॥ वज्रदंष्ट्रा वज्रजिह्वा वैदेही वज्रविग्रहा ९३० ॥ मंगल्या मङ्गला माला मलिना मलहारिणी ॥ १४२ ॥गन्धर्वी गारुडी चान्द्री कंबलाश्वतरप्रिया ॥ सौदामनी ९४० जनान्दा भ्रुकुटीकुटिलानना ॥१४३॥ कर्णिकारकरा कक्षा कंसप्राणापहारिणी ॥ युगंधरा युगावर्त्ता त्रिसंध्या हर्षवर्धिनी ॥ १४४ ॥ प्रत्यक्षदेवता ९५० दिव्या दिव्यगन्धा दिवापरा ॥ शक्रासनगता शाक्री साध्वी नारी शवासना ॥१४५॥ इष्टा विशिष्टा ९६० शिष्टेष्टा शिष्टाशिष्टप्रपूजिता ॥ शतरूपा शतावर्त्ता विनीता सुरभिः सुरा ॥ १४६ ॥

लअश्वरनामक नागोंकी प्रिया, सौदामनी ९४०, जनोंको आनन्द देनेवाली, भ्रुकुटिसे कुटिलमुखवाली ॥ १४३ ॥ कर्णिकारसे करवाली, कक्षा, कंसके प्राण हरनेवाली, युगन्धरा, युगका आवर्तन करनेवाली, त्रिसंध्यारूप, हर्षकी बढानेवाली ॥ १४४ ॥ प्रत्यक्ष देवता ९५०, दिव्या, दिव्यगंधवाली, दिवापरा, इन्द्रके आसनपर प्राप्त होनेवाली, शक्रकी शक्ति, साध्वी, नारी,शवकी भक्षण करनेवाली ॥१४५॥इष्टा, विशिष्टा ९६०,

शिष्टोंको इष्टरूप, शिष्ट अशिष्टोंसे पूजित, शतरूपा, शतावर्ता, विनीता, मनोहरा, सुगन्धियुक्ता, सुरा, ॥ १४६ ॥ सुरेन्द्रकी माता, सुद्युम्ना ९७० सुषुम्नानाडीरूप, सूर्यमें स्थित, समीक्षा, सत्में प्रतिष्ठित, निर्वृत्तिस्वरूप, ज्ञानकी पारगामिनी ॥ १४७ ॥ धर्मशास्त्रके अर्थमें कुशल, धर्मकी जानने वाली, धर्मवाहना, धर्म अधर्मकी निर्माण करनेवाली, ९८० धर्मात्माओंको मंगल देनेवाली ॥ १४८॥ धर्मशक्ति, धर्ममयी, विधर्मा, संसारके धर्मवाली, धर्ममें अन्तरवाली, धर्ममध्यवाली, धर्मसे पूर्वस्थित, धनप्रिया ॥ १४९ ॥ धर्मके उपदेशवाली ९९० धर्मात्मा, धर्मसे प्राप्त होनेवाली, पृथ्वीकी

सुरेंद्रमाता सुद्युम्ना९७०सुषुम्ना सूर्यसंस्थिता॥समीक्षा सत्प्रतिष्ठा च निर्वृत्तिर्ज्ञानपारगा॥१४७॥धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना ॥ धर्माधर्मविनिर्मात्री९८०धार्मिकाणां शिवप्रदा॥१४८॥धर्मशक्तिर्धर्ममयी विधर्मा विश्वधर्मिणी॥धर्मांतरा धर्ममध्या धर्मपूर्वा धनप्रिया॥१४९॥धर्मोपदेशा९९०धर्मात्मा धर्मलभ्या धराधरा॥कपाली शाकलामूर्तिः कलाकलितविग्रहा॥१५०॥ सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रयाश्रया॥सर्वा सर्वेश्वरी १००० सूक्ष्मा सुसूक्ष्मज्ञानरूपिणी ॥१५१॥ प्रधानपुरुषेशाना महापुरुषसाक्षिणी॥सदाशिवा वियन्मूर्तिर्देवमूर्तिरमूर्तिका१००८॥१५२॥एवं नाम्नां सहस्रेण तुष्टाव रघुनंदनः॥कृतांजलिपुटो भूत्वा सीतां हृष्टतनूरुहाम्१५३

धारण करनेवाली, कपाली, शाकलामूर्ति, कलाकलिशरीरवाली ॥ १५० ॥ सब शक्तियोंसे पृथक्, सब शक्त्योंके आश्रयवाली, सर्वरूप सर्वेश्वरी १००० सूक्ष्मा, अत्यन्त सूक्ष्म ज्ञानके रूपवाली ॥ १५१ ॥ प्रधान पुरुष, ईशाना, महापुरुषकी साक्षिणी सदाकल्याणरूपा, आकाशमूर्ति, देवमूर्ति, मूर्तिरहित १००८ तुम हो तुम्हारे निमित्त नमस्कार है ॥ १५२ ॥ इस प्रकार हाथ जोडे प्रसन्नमन रोमांचशरीर हो

रघुनन्दनने जानकीको प्रसन्न किया ॥ १५३ ॥ हे भारद्वाज महाभाग ! जो कोई इस अद्भुत स्तोत्रको सुनता है पढता है वा पढाता है वह परमपदको जाता है ॥ १५४ ॥ ब्राह्मण क्षत्रिय वैश्य शाश्वत ब्रह्मको प्राप्त होते हैं और शूद्रको सद्गति तथा धन धान्यकी प्राप्ति होती है ॥ १५५ ॥ इस स्तोत्रके माहात्म्यसे परम मंगल होता है महामारीभय राजभय चोर अग्निका भय ॥ १५६ ॥ महाघोर व्याधि शत्रुओंके संकटमें, अनावृ

भारद्वाज महाभाग यश्चैतत्स्तोत्रमद्भुतम् ॥ पठेद्वा पाठयेद्वापि स याति परमं पदम् ॥ १५४ ॥ ब्रह्मक्षत्रियविड्योनिर्ब्रह्म प्राप्नोति शाश्वतम् ॥ शूद्रः सद्गतिमाप्नोति धनधान्यविभूतयः ॥ १५५ ॥ भवंति स्तोत्रमाहात्म्यादेतत्स्वस्त्ययनं महत् ॥ मारीभये राजभये तथा चोराग्निजेभये ॥ १५६ ॥ व्याधीनां प्रभवे घोरे शत्रूत्थाने च संकटे ॥ अनावृष्टिभये विप्र सर्वशांतिकरं परम् ॥ १५७ ॥ यद्य दिष्टतमंयस्य तत्सर्वंस्तोत्रतो भवेत् ॥ यत्रैतत्पठ्यते सम्यक् सीतानामसहस्रकम् ॥ १५८ ॥ रामेण सहिता देवी तत्र तिष्ठत्य संशयम् ॥ महापापातिपापानिविलयं यांति सुव्रत ॥ १५९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अद्भुतोत्तरकांडे सीतासहस्रनामस्तोत्रकथनं नाम पंचविंशतितमः सर्गः ॥ २५ ॥

ष्टिके भयमें सब प्रकारकी शान्ति होती है ॥ १५७ ॥ जो जो इसको इष्ट हो वह सब इस स्तोत्रके पाठसे हो जाता है, जहाँ यह सीतासहस्रनाम पढा जाता है ॥ १५८ ॥ वहां रामके सहित देवी स्थित होती है इसमें संदेह नहीं. हे द्विज ! महापाप और घोरपाप भी इससे छूट जाते हैं ॥ १५९ ॥ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अद्भुतोत्तरकाण्डे पंडितज्वालाप्रसादमिश्रकृतभाषाटीकायां सीतासहस्रनामस्तोत्रकथनं नाम

पंचविंशतितमः सर्गः ॥ २५ ॥ इस प्रकार रघुनंदन सहस्रनामसे स्तुति करे फिर हाथ जोड प्रणाम कर जानकीसे कहने लगे ॥१॥ हे परमेश्वरी ! जो यह तेरा घोर परमेश्वरसम्बन्धी रूप है इससे मैं भीत हो रहा हूं इस कारण इसे शान्त कर सौम्यरूप दिखाओ ॥२॥ जब रामने मैथिली जानकीसे ऐसा कहा तब जानकीने अपना रूप शान्त कर सौम्यरूप दिखलाया ॥ ३ ॥ जो कञ्चनके कमलकी समान पद्मदलकी समान, सुगंधि

एवं नामसहस्रेण स्तुत्वाऽसौ रघुनंदनः ॥ भूयः प्रणम्य प्रीतात्मा प्रोवाचेदं कृतांजलिः ॥१॥ यदेतदैश्वरं रूपं घोरं ते परमेश्वरि ॥ भीतोऽस्मि सांप्रतं दृष्ट्वा रूपमन्यत्प्रदर्शय ॥ २ ॥ एवमुक्ताथ सा देवी तेन रामेण मैथिली ॥ संहृत्य दर्शयामास स्वं रूपं परमं पुनः ॥ ३ ॥ कांचनांबुरुहप्रख्यं पद्मोत्पलसुगंधिकम् ॥ सुनेत्रं द्विभुजं सौम्यं नीलालकविभूषितम् ॥ ४ ॥ रक्तपादांबुजतलं सुरक्तकरपल्लवम् ॥ श्रीमद्विशालसद्वृत्तललाटतिलकोज्ज्वलम् ॥ ५ ॥ भूषितं चारुसर्वांगं भूषणैरभिशोभितम् ॥ दधानं सुरसां मालां विशालां हेमनिर्मिताम् ॥ ६ ॥ ईषत्स्मितं सुबिंबोष्ठं नूपुरांबरसंयुतम् ॥ प्रसन्नवदनं दिव्यमनन्तमहिमास्पदम् ॥ ७ ॥ तदीदृशं समालोक्य रूपं रघुकुलोत्तमः ॥ भीतिं संत्यज्य हृष्टात्मा बभाषे परमेश्वरीम् ॥ ८ ॥

वाला सुन्दर नेत्र दो भुजा, नीली अलकोंसे विभूषित ॥ ४ ॥ लाल चरण लाल करपल्लव श्रीमान् विशाल सद्वृत्त ललाटके ऊपर उज्ज्वल तिलक लगाये ॥ ५ ॥ सम्पूर्ण सुन्दर अंग भूषणोंसे शोभित विशाल सुवर्णनिर्मित सुरसमाला धारण किये ॥ ६ ॥ कुछेक हास्ययुक्त बिम्बाफलके समान ओष्ठ, नूपुर और अम्बरसे संयुक्त प्रसन्नमुख दिव्य और अनन्तमहिमाका स्थान ॥ ७ ॥ रघुनाथजी जानकीका इस प्रकारका

रूप देखकर भयको त्याग प्रसन्न हो परमेश्वरीसे कहने लगे ॥ ८ ॥ आज मेरा जन्म और तप सफल है जो तुम अव्यक्ता साक्षात् मेरी दृष्टिके सन्मुख हुई हो और प्रसन्न हुई हो ॥ ९ ॥ तुमनेही सब जगत् निर्माण किया है और यह प्रधानादि तुममें स्थित है. हे देवि ! यह अन्तमें तुममेंही लय हो जाता है, तुमही परागति हो ॥ १० ॥ कोई तुमहीको प्रकृतिसे विकृतिसे परे कहते हैं. परमात्माके जाननेवाले शिवके

अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ यन्मे साक्षात्त्वमव्यक्ता प्रसन्ना दृष्टिगोचरा ॥९॥ त्वया सृष्टं जगत्सर्वं प्रधानाद्यं त्वयि स्थितम् ॥ त्वय्येव लीयते देवि त्वमेव च परागतिः ॥ १० ॥ वदंति केचित्त्वामेव प्रकृतिं विकृतेः परम् ॥ अपरे परमात्मज्ञाः शिवेति शिवसंश्रये ॥११॥ त्वयि प्रधानं पुरुषो महान्ब्रह्मा तथेश्वरः ॥ अविद्या नियतिर्माया कालाद्याः शतशोऽभवन् ॥१२॥ त्वं हि सा परमा शक्तिरनंता परमेष्ठिनी ॥ सर्वभेदविनिर्मुक्ता सर्वभेदाश्रया निजा ॥१३॥ त्वामधिष्ठाय योगेशि पुरुषः परमेश्वरीम् ॥ प्रधानाद्यं जगत्कृत्स्नं करोति विकरोति च ॥१४॥ त्वय्यैव संगतो देवः स्वमानंदं समश्नुते ॥ त्वमेव परमानंदस्त्वमेवानन्ददायिनी १५

आश्रयमें शिवा कहते हैं ॥ ११ ॥ तुममें प्रधान पुरुष महान् ब्रह्मा ईश्वर अविद्या नियति माया कालादि सैकडों होतेहैं ॥१२॥ तुमही अनन्त परमेष्ठिनी परमशक्ति हो, सब भेदोंसे निर्मुक्त सब भेदोंके आश्रयवाली निजस्वरूप ॥ १३ ॥ हो हे योगेशि ! तुम परमेश्वरको प्राप्त होकर पुरुष प्रधानादि सब जगत्को निर्माण कर फिर संहार करती है ॥ १४ ॥ तुम्हारी संगतिसे देव अपने आनंदको प्राप्त होता है,तुमही परमानंद और आनं

१ स्वके नित्ये निजं त्रिष्वित्यमरान्नित्या ।

दकी देनेवाली हो ॥ १५ ॥ तूही परमाकाश महाज्योति निरञ्जन है, शिव सर्वगत सूक्ष्म परब्रह्म सनातन है ॥ १६ ॥ तुम सब देवताओंके इन्द्र, ब्रह्मज्ञानियोंके ब्रह्मा हो, सांख्योंमें कपिलदेव, रुद्रोंमें शंकर हो ॥ १७ ॥ आदित्योंमें उपेन्द्र और वसुओंमें पावक हो, वेदोंमें सामवेद और छंदोंमें गायत्री हो ॥ १८ ॥ विद्यामें अध्यात्मविद्या गतियोमें परमगति सर्वशक्तियोंकी माया, और कलित करनेवालोंमें काल तुम हो ॥ १९ ॥

त्वमेव परमं व्योम महाज्योतिर्निरंजनम् ॥ शिवं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् ॥ १६ ॥ त्वं शक्रः सर्वदेवानां ब्रह्मा ब्रह्मविदामपि ॥ सांख्यानां कपिलो देवो रुद्राणामसि शंकरः ॥१७॥ आदित्यानामुपेंद्रस्त्वं वसूनां चैव पावकः ॥ वेदानां सामवेदस्त्वं गायत्री छन्दसामपि ॥ १८ ॥ अध्यात्मविद्या विद्यानां गतीनां परमा गतिः॥ माया त्वं सर्वशक्तीनां कालः कलयतामपि ॥१९॥ ॐकारः सर्वगुह्यानां वर्णानां च द्विजोत्तमः ॥ आश्रमाणां गृहस्थस्त्वमीश्वराणां महेश्वरः ॥ २० ॥ पुंसां त्वमेव पुरुषः सर्वभूत हृदि स्थितः ॥ सर्वोपनिषदां देवि गुह्योपनिषदुच्यसे ॥ २१ ॥ ईशनं चासि भूपानां युगानां कृतमेव च ॥ आदित्यः सर्वम[1]र्गाणां वाचां देवि सरस्वती ॥ २२ ॥

सम्पूर्ण गुह्योंमें ॐकार तुम हो, वर्णोंमें ब्राह्मण, आश्रमोंमें गृहस्थ, और ईश्वरोंमें महेश्वर तुम हो ॥ २० ॥ पुरुषोंमें पुरुष सब भूतोंके हृदयमें तुम स्थित हो हे देवि ! सम्पूर्ण उपनिषदोंमें गुप्त उपनिषद् तुम हो ॥ २१ ॥ राजोंमें ईशता, और युगोंमें सतयुग तुम हो, अर्चिरादि सब मार्गोंमें

१ अर्चिरादिमार्गाणाम्।

आदित्य, वाणियोंमें सरस्वती देवी तुम हो ॥ २२ ॥ सुन्दर रूपवालोंमें लक्ष्मी, मायावियोंमें विष्णु, सतियोंमें अरुन्धती, पक्षियोंमें गरुड तुम हो ॥ २३ ॥ वेदके सूक्तोंमें पुरुषसूक्त, साममें ज्येष्ठ साम, जपोंमें सावित्री, और यजुओंमें शतरुद्रिय तुम हो ॥ २४ ॥ पर्वतोंमें मेरु भोगियों ( सर्पों ) में अनन्त, सबके परब्रह्म तुम हो यह सब तुममें हैं ॥ २५ ॥ तुम्हारा रूप सब कलासे विहीन अगोचर निर्मल एक है,आदि

त्वं लक्ष्मीश्चारुरूपाणां विष्णुर्मायाविनामपि ॥ अरुंधती सतीनां त्वं सुपर्णः पततामसि ॥२३॥ सूक्तानां पौरुषं सूक्तं ज्येष्ठं साम च सामसु ॥ सावित्री ह्यसि जप्यानां यजुषां शतरुद्रियम् ॥ २४ ॥ पर्वतानां महामेरुरनन्तो भोगिनामसि ॥ सर्वेषां त्वं परंब्रह्म त्वन्मयं सर्वमेव हि ॥२५॥ रूपं तवाशेषकलाविहीनमगोचरं निर्मलमेकरूपम् ॥ अनादिमध्यान्तमनन्तमाद्यं नमामि सत्यं तमसः परस्तात् ॥ २६ ॥ यदेव पश्यंति जगत्प्रसूतिं वेदांतविज्ञानविनिश्चितार्थाः ॥ आनन्दमात्रं परमाभिधानं तदेव रूपं प्रणतोऽस्मि नित्यम् ॥ २७ ॥ अशेषसूत्रांतरसन्निविष्टं प्रधानसंयोगवियोगहेतुः ॥ तेजोमयं जन्मविनाशहीनं प्राणाभिधानं प्रणतोऽस्मि रूपम् ॥२८॥ आद्यंतहीनं जगदात्मरूपं विभिन्नसंस्थं प्रकृतेः परस्तात् ॥ कूटस्थमव्यक्तवपुस्तवैव नमामि रूपं पुरुषाभिधानम् ॥२९॥

अन्त मध्यरहित अनन्त तुमसे परे, सबकी आदि तुमको मैं प्रणाम करता हूं ॥ २६ ॥ जो वेदान्तके विज्ञानसे निश्चित अर्थवाले होकर इस जगत्की प्रसूति तुमको जब देखते हैं, उस आनन्दमय परम तुम्हारे रूपको मैं नित्य प्रणाम करता हूं ॥ २७ ॥ सम्पूर्णके सूत्रान्तरमें सन्निविष्ट प्रधानसंयोगवियोगके हेतु तेजोमय जन्मविनाशसे हीन प्राणरूप तुमको मैं नित्य नमस्कार करता हूं ॥२८॥ आदि अन्तमें हीन, जगत्के आत्म

१ कलाः कलनानि परिच्छेदा इति यावत् । कल संख्याने । यावत्परिच्छेदशून्यमपरिच्छिन्नमिति यावत् ।

रूप, भिन्नसंस्थावान्, प्रकृतिसे परे, कूटस्थ अव्यक्त शरीर पुरुषरूप तुमको नित्य नमस्कार करताहूं ॥ २९ ॥ सबके आश्रय, सब जगत्के निधान, सब स्थानमें जानेवाले, जन्मविनाशसे रहित, अणुप्रभेद आद्य महत्त्व पुरुष अनुरूप तुम्हारे रूपको मैं प्रणाम करता हूं ॥ ३० ॥ प्रकृतिकी अवस्थावाला, त्रिगुणात्मबीज, ऐश्वर्य विज्ञान विराग धर्मोंसे युक्त, चौदह लोकात्मक, जलमें स्थित, आपके रूपको नमस्कार करता

सर्वाश्रयं सर्वजगन्निधानं सर्वत्रगं जन्मविनाशहीनम् ॥ नतोऽस्मि ते रूपमणुप्रभेदमाद्यं महत्त्वे पुरुषानुरूपम् ॥३०॥ प्रकृत्यवस्थं त्रिगुणात्मबीजमैश्वर्यविज्ञानविरागधर्मैः ॥ समन्वितं देवि नतोऽस्मि रूपं द्विसप्तलोकात्मकमंबुसंस्थम् ॥३१॥ विचित्रभेदं पुरुषैकनाथमनंतभूतैर्विनिवासितं ते ॥ नतोऽस्मि रूपं जगदंडसंज्ञमशेषवेदात्मकमेकमाद्यम्॥३२॥स्वतेजसा पूरितलोकभेदं नमामि रूपं रविमंडलस्थम् ॥ सहस्रमूर्द्धानमनंतशक्तिं सहस्रबाहुं पुरुषं पुराणम् ॥ शयानमंतःसलिले तवैव नारायणाख्यं प्रणतोऽस्मि रूपम् ॥ ३३ ॥ दंष्ट्राकरालं त्रिदशाभिवंद्यं युगांतकालानलकल्परूपम् ॥ अशेषभूतांडविनाशहेतुं नमामि रूपं नव कालसंज्ञम् ॥ ३४ ॥

हूं॥३१॥विचित्रभेद पुरुष एकनाथ अनन्त भूतोंसे निवासित जगत्के अंडसंज्ञक अशेष वेद आद्य तुम्हारे रूपको नमस्कार करता हूं ॥३२॥ अपने तेजसे लोकको भेद पूर्ण रविमण्डलमें स्थित तुम्हारे रूपको नमस्कार करता हूं. सहस्रमूर्धावाले अनन्तशक्ति सहस्रबाहु पुराणपुरुष जलके भीतर शयन करनेवाले नारायणाख्य आपके रूपको नमस्कार करता हूं ॥ ३३ ॥ कराल डाढोंवाला देवताओंसे नमस्कृत युगान्तकालानलके समान

प्रकाशित सम्पूर्ण भूतअण्डके विनाशकारण कालसंज्ञक तुम्हारे रूपको नमस्कार करता हूं ॥ ३४ ॥ सहस्रफणोंसे विराजमान पृथ्वीतलमें स्थित अप्रमेय सम्पूर्ण भारके उद्वहन करनेमें समर्थ अनन्तसंज्ञक अव्याहतैश्वर्य नेत्रद्वयवाले ब्रह्मानंदमें स्थित स्वर्गमें नाचनेवाले ऐसे तुम्हारे रुद्र रूपको नमस्कार करता हूं ॥ ३५ ॥ ३६ ॥ शोकरहित विमल पवित्र सुर असुरोंसे अर्चित चरणकमल कोमल विशाल शुभ्र इस तुम्हारे

फणासहस्रेण विराजमानं भुवस्तलेऽधिष्ठितमप्रमेयम् ॥ अशेषभारोद्वहने समर्थं नमामि ते रूपमनंतसंज्ञम् ॥३५॥ अव्याहतैश्वर्यम युग्मनेत्रं ब्रह्मात्मतानंदरसज्ञमेकम् ॥ युगांतशेषं दिवि नृत्यमानं नतोऽस्मि रूपं तव रुद्रसंज्ञम् ॥३६॥ प्रहीणशोकं विमलं पवित्रं सुरा सुरैरर्चितपादयुग्मम् ॥ सुकोमलं देवि विशालशुभ्रं नमामि ते रूपमिदं नमामि ॥३७॥ एतावदुक्त्वा वचनं रघुराजकुलोद्वहः॥ संप्रे क्षमाणो वैदेहीं प्रांजलिः पार्श्वतोऽभवत् ॥ ३८ ॥ अथ सा तस्य वचनं निशम्य जगतीपतेः ॥ सस्मितं प्राह भर्तारं शृणुष्वेकं वचो मम ॥ ३९ ॥ गृहीतं यन्मया रूपं रावणस्य वधाय हि ॥ तेन रूपेण राजेंद्र वसामि मानसोत्तरे ॥ ४० ॥

रूपको मैं प्रणाम करता हूं ॥ ३७ ॥ राजा रघुकुलनंदन राम हाथ जोडे यह वचन कहते देवीके पार्श्वभागमें स्थित हुए ॥ ३८ ॥ तब जानकी जगत्पतिके वचन श्रवण करके हँसती हुई स्वामीसे बोली हमारा आप एक वचन सुनिये ॥ ३९ ॥ जो मैंने रावणके वधके

निमित्त यह रूप धारण किया है इस रूपसे मैं मानसके उत्तरभागमें निवास करूंगी ॥ ४० ॥ तुम प्रकृतिसे नीलरूप हो रावणसे अर्दित होनेसे लोहितवर्ण हुए हो सो नीललोहित रूपसे तुम्हारे साथ मैं निवास करूंगी ॥ ४१ ॥ हे राम ! जिस वरकी इच्छा हो सो आप मुझसे माँगिये, यह वचन सुन रामचन्द्र उस पर्वतकी स्थितिको अंगीकार कर ॥ ४२ ॥ हे भारद्वाज ! अंश भागद्वारा परमेश्वरीसे मांगने लगे, हे महाभागे देवि

प्रकृत्या नीलरूपस्त्वं लोहितो रावणार्दितः ॥ नीललोहितरूपेण त्वया सह वसाम्यहम् ॥ ४१ ॥ गृहाण च वरं राम मत्तो यद भिकांक्षितम् ॥ तच्छ्रुत्वा राघवो वीरः प्रतिश्रुत्य गिरौ स्थितिम् ॥ ४२ ॥ भारद्वाजांशभागेन ययाचे परमेश्वरीम् ॥ देवि सीते महाभागे दर्शितं रूपमैश्वरम् ॥४३॥ हृदयान्नापगच्छेत्तदिति मे दीयतां वरः ॥ भ्रातरो मम कल्याणि वानराः सविभीषणाः॥४४॥ सेनान्यो मम वैदेहि अयोध्यायोधमुख्यकाः ॥ पुनस्ते संगताः संतु मया रावणतर्जिताः ॥ ४५ ॥ एतस्मिन्नंतरे चाभूदाकाशे दुंदु भिस्वनः ॥ पपात पुष्पवृष्टिश्च रामसीतोपरि द्विज ॥ ४६ ॥

सीते ! यह जो तुमने ईश्वरसम्बन्धी रूप दिखाया है ॥ ४३ ॥ यह कभी मेरे हृदयसे न जाय यही वर मुझे दीजिये. हे कल्याणी ! मेरे भ्राता वानर और विभीषणादि सुहृद् ॥ ४४ ॥ हमारे सब सेनाके लोग अयोध्याके मुख्य योधा जो रावणसे तर्जित हो गये हैं वे सब मुझसे फिर मिल जायँ ॥ ४५ ॥ उसी समय आकाशसे दुन्दुभीका शब्द होने लगा, राम सीताके ऊपर फूलोंकी वर्षा होने लगी ॥ ४६ ॥

तब हँसकर जानकी रघुनाथजीसे कहने लगीं कि, ऐसाही होगा तब रघुनाथजी ब्रह्मादिक देवताओंको बिदा कर सीताको ले अपने देश जानेकी
इच्छा करने लगे ॥ ४७ ॥ इत्यार्ष श्रीमद्रा० अद्भुतोत्तरकाण्डे भाषाटीकायां श्रीरामविजयो नाम षड्विंशतितमः सर्गः ॥ २६ ॥ पुष्पकपर
चढे हुए राम भुजासे जानकीको आलिंगन कर वह काकुत्स्थकुलप्रकाशक अयोध्याको चले ॥ १ ॥ उस पुष्पकका शब्द सुनकर रामके दर्शनकी

प्रहस्य सीता पुनराह रामं तथेति रामोऽपि विरिंचिमुख्यान् ॥ स तान्विसृज्य प्रतिगृह्य सीतां गंतुं स्वकं देशमसावियेष ॥ ४७॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अद्भुतोत्तरकाण्डे श्रीरामविजयो नाम षड्विंशतितमः सर्गः ॥ २६ ॥ रामस्तु
पुष्पकारूढः सीतामालिंग्य बाहुना ॥ अयोध्यामगमद्वीरः काकुत्स्थकुलनन्दनः ॥१॥ रथनेमिस्वनं श्रुत्वा रामदर्शनलालसाः॥
भ्रातरो भरताद्यास्ते योधमुख्याश्च ते तथा ॥ २ ॥ राममागतमाज्ञाय ससीतं सऋषिव्रजम् ॥ प्रणेमुः सहसागत्य आनन्दाश्रुकणा
कुलाः ॥ ३ ॥ वानराव्राक्षसान्सर्वानानाय्य स्वपुरं हि सः ॥ सर्वं तत्कथयामास रामः कमललोचनः ॥ ४ ॥ तच्छ्रुत्वा विस्मिताः
सर्वे साधुसाध्विति वादिनः ॥ सीतां तत्त्वेन विज्ञाय रामं च मधुसूदनम् ॥ ५ ॥

लालसावाले भरतादिक भ्राता और मुख्य योधा ॥ २ ॥ सीता और ऋषियोंके साथ रामको आया जानकर आनन्दके आंसु भरे सहसा रामसे
आकर प्रणाम करने लगे ॥ ३ ॥ सब वानर राक्षसोंको अपने पुरमें लाकर कमललोचन रामने रावणवधका सम्पूर्ण वृत्तान्त सुनाया ॥ ४ ॥ यह
सुनकर सब विस्मित हो धन्य धन्य कहने लगे, तत्त्वसे सीताको जानकर और मधुसूदनरूप रामको जानकर ॥ ५ ॥

यही विचार करते वे अपने २ स्थानाको चले गये, उन महात्माओंको रामचन्द्रने सत्कारपूर्वक विदा किये ॥ ६ ॥ सीतासहित रघुनाथको ऋषिजन अभिनन्दन कर आशीर्वादोंसे बढाकर अपने २ स्थानोंको गये ॥७॥ रामचन्द्रभी सीता और महात्मा भ्राताओंके साथमें देवताओंके हितके निमित्त पृथ्वीको निष्कंटक करते हुए ॥ ८ ॥ सरयूके किनारे उत्तमोत्तम बहुतसे यज्ञ किये. इस प्रकार ग्यारह सहस्र वर्षसे कुछ अधिक रामने राज्य

तदेवं चिंतयंतस्ते स्वं स्वं स्थानं ययुर्मुदा ॥ विसृष्टा रामभद्रेण सांत्वपूर्वं महात्मना ॥६॥ ऋषयश्चाभिनंद्यैनं ससीतं रघुनंदनम्॥ आशीर्भिर्वर्धयामासुर्ययुश्चापि यथागतम् ॥७॥ रामोऽपि सीतया सार्द्धं भ्रातृभिश्च महात्मभिः ॥ चक्रे निष्कंटकां पृथ्वीं देवानां च महद्धितम् ॥८॥ यज्ञान् बहुविधांश्चक्रे सरयूतीर उत्तमे ॥ दशवर्षसहस्राणि दशवर्षशतानि च ॥ किंचिदभ्यधिकं चैव रामो राज्य मकारयत् ॥ ९ ॥ देवकिन्नरगंधर्वा विद्याधरमहोरगाः ॥ रामं नमंति सततं गुणारामं रमापतिम् ॥ १०॥ एतत्ते कथितं भद्र भार द्वाज महामते ॥ तेषु किंचिदिहाश्चर्यमुक्तं-रामकथाश्रयम् ॥ ११ ॥ सर्वं न वक्तुमिच्छामि पुनरुक्तिभयाद्द्विज ॥ ब्रह्मणा गोपितं तच्च अतोपि न तदुक्तवान् ॥ १२ ॥

किया ॥ ९ ॥ देव किन्नर गंधर्व विद्याधर महासर्प गुणोंके खान रामको सदा प्रणाम करते रहे ॥ १० ॥ हे भारद्वाज महामते ! यह सब आपके प्रति कथन किया, रामचरित्र अनेक हैं उनमें कुछेक रामकथाके आश्रयके चरित्र वर्णन किये हैं ॥ ११ ॥ पुनरुक्तिके भयसे मैं संपूर्ण कहनेको समर्थ नहीं हूं, ब्रह्माजीने गुप्त कर रक्खा था इस कारण मैंने तुमसे वणन नहीं किया था ॥ १२ ॥

यह वेदसम्मत अद्भुतोत्तरकाण्ड वर्णन किया है जो इसको पढते सुनते हैं वे परब्रह्मको प्राप्त होते हैं ॥१३॥ जो मनुष्य इसका एक वा आधा श्लोक सुनते हैं, उनको प्रातः मध्याह्न योगमें पढनेसे परम पदकी प्राप्ति होती है ॥१४॥ पचीस सहस्र रामायण पढकर जो पुण्य प्राप्त होता है, वह इसके एक श्लोकसे मिलता है ॥ १५ ॥ जिसने इसको न पढा न सुना वह गर्भसे नहीं निकला, भ्रूण ( गर्भ ) की समान है ॥१६॥ इस रामायणको

अद्भुतोत्तरकाण्डे तत्कथितं वेदसंमितम् ॥ शृणोत्यधीते यश्चैतत्स ब्रह्म परमाप्नुयात् ॥१३॥ श्लोकमेकं तदर्धं वा शृणुयाद्यश्च मानवः ॥ प्रातर्मध्याह्नयोगे वा स याति परमां गतिम् ॥१४॥ पञ्चविंशतिसाहस्रं रामायणमधीत्य यत् ॥ फलमाप्नोति पुरुषस्तदस्य श्लोकमात्रतः ॥१५॥ न श्रुतं नाप्यधीतं वा येन श्रुतमिदं द्विज ॥ स गर्भान्निःसृतो नैव यथा भ्रूणस्तथैव सः ॥१६॥ रामायणमिदं श्रुत्वा न मातुर्जठरे विशेत् ॥ वेदाश्चत्वार एकत्र तुलया चेदमेकतः ॥ १७ ॥ विधात्रा तुलितं शास्त्रं सर्वदेवाग्रतो द्विज ॥ इदं तु सर्ववेदेभ्यो गौरवादतिरिच्यते ॥१८॥ शक्राय स्वर्णदीतीरे पुरा पृष्टोऽहमब्रुवम् ॥ तदेव तव चाख्यातमद्भुतोत्तरकाण्डकम् ॥१९॥ रामायणं महारत्नं ब्राह्महृत्क्षीरधावभूत् ॥ नारदान्तः समासाद्य क्रमान्मम हृदि स्थितम् ॥ २० ॥

सुनकर फिर माताके उदरमें प्रवेश करना नहीं पडता, चार वेद एक ओर और रामायण एक ओर रखकर ॥ १७ ॥ विधाताने देवतोंके सामने इसको तोला तो यह गौरवमें वेदोंसे अधिक पाई गई ॥ १८ ॥ स्वर्णके किनारे पहले मैंने इन्द्रके पूँछनेपर यह कथा कही थी वही अद्भुतोत्तरकाण्ड तुमसे वर्णन किया है ॥ १९ ॥ यह रामायणरूपी महारत्न ब्रह्माजीके हृदयरूपी क्षीरसद्ममें स्थित था, फिर वह नारदके अन्तरमें

प्राप्त हो क्रमसे मेरे हृदयमें प्राप्त हुआ है ॥ २० ॥ यह सब चरित्र तो ब्रह्मलोकमें स्थित है, कुछ पृथ्वी पातालमें और स्वर्गमें इन्द्रके समीप स्थित है ॥ २१ ॥ ब्रह्मा नारद और मैं यह तीनही इसके पारगामी हैं चौथा नहीं है ऐसा जानकर स्थिर हो ॥ २२ ॥ जो कुछ इस अद्भुतोत्तर काण्डमें कहा है उसकी सूची तुमसे कहता हूँ, रामजन्मका वृत्तान्त, श्रीमतीका चारित्र ॥ २३ ॥ दण्डकारण्यमें रहनेवाले महात्मा ऋषि

तत्सर्वं ब्रह्मणो लोके निःशेषमवतिष्ठते ॥ किंचिदुर्व्यां च पाताले त्रिदिवे शक्रसन्निधौ ॥२१॥ विरिंचिर्नारदोऽहं च त्रय एवास्य पारगाः ॥ चतुर्थो नोपपद्येत बुद्ध्वेदं सुस्थिरो भव ॥२२॥ यदुक्तमद्भुते काण्डे पुनस्ते कथयाम्यहम् ॥ श्रीरामजन्मवृत्तान्तः श्रीमतीचरितं महत् ॥ २३ ॥ दण्डकारण्यकस्थानां शोणितेन महात्मनाम् ॥ नारदस्य च शापेन लक्ष्म्याश्चैवापराधतः ॥ २४ ॥ मंदोदरीगर्भनिष्ठा वैदेही जन्म चोक्तवान् ॥ रामस्य विश्वरूपं च भार्गवेण च वीक्षितम् ॥ २५ ॥ ऋष्यमूके हनुमता चतुर्बाहू रघूत्तमः ॥ दृष्टो भिक्षुस्वरूपेण सुग्रीवसख्यमुक्तवान् ॥२६॥ लक्ष्मणांगजतापेन शोषणं वारिधेः पुनः ॥ प्राप्तराज्यस्य रामस्य मुनीनां सन्निधौ तथा ॥ २७ ॥ सीतायाः कथनं श्रुत्वा सहस्रास्यस्य रक्षसः ॥ मानसोत्तरशैलेंद्रे स्थितिं ज्ञात्वा रघूद्वहः ॥ २८ ॥

योंका रुधिर लेना, नारदके शापसे और लक्ष्मीके अपराधसे ॥ २४ ॥ मन्दोदरीके गर्भसे जानकीका जन्म, रामचन्द्रका भार्गवको विश्वरूप दिखाना ॥ २५ ॥ ऋष्यमूकमें हनुमान्‌जीको चतुर्बाहुरूप दर्शन देना और भिक्षुरूपसे महाराजसे मिलकर सुग्रीवकी मित्रता करानी ॥ २६ ॥ फिर लक्ष्मणके अंगसे उत्पन्न हुए तापसे सागरको सुखाना, फिर राज्य प्राप्त होकर मुनियोंके निकटमें ॥ २७ ॥ जानकीसे सहस्रमुखी रावणका

वृत्तान्त सुनकर और उसकी स्थिति मानसके उत्तरभागम जानकर ॥ २८ ॥ रामचन्द्र भाइयों सहित पुष्करद्वीपको गये; सीताका ईश्वरसम्बन्धी रूप और सहस्रमुख रावणका वध ॥ २९ ॥ फिर अयोध्यामें आगमन रामका वृत्तान्तसंग्रह है, राममें भक्ति करनेवाला इसही वृत्तान्तको पाठकर रघुनाथमें भक्तिमान् होता है, हे मुनिराज ! इसमें सन्देह नहीं ॥ ३० ॥ जो कोई इस रामचरित्रको पढता है, वह तरकर सुकृतको प्राप्त होता है, तीर्थका अभिषेक, समरमें जय और सब यज्ञका महाफल प्राप्त करता है ॥ ३१ ॥ जो अचिन्त्यरूप रामका भजन

जगाम पुष्करद्वीपं भ्रातृभिः सह वानरैः ॥ सीताया ऐश्वरं रूपं रावणस्य वधस्तथा ॥ २९ ॥ अयोध्यागमनं रामस्यैष वृत्तान्त संग्रहः ॥ वृत्तान्तसंग्रहं चापि पठित्वा रामभक्तिमान् ॥ जायते मुनिशार्दूल नात्र कार्या विचारणा ॥ ३० ॥ पठेच्च यो रामचरित्र मेतत्पुनाति पापात्सुकृतं लभेत ॥ तीर्थाभिषेकं समरे जयं च स सर्वयज्ञस्य महत्फलं च ॥ ३१ ॥ भजेत यो राममचिंत्यरूपमे केन भावेन च भूमिपुत्रीम् ॥ एतत्सुपुण्यं शृणुयात्पठेद्वा भूयो भवेन्नो जठरे जनन्याः ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अद्भुतोत्तरकांडे श्रीसीतारामयोरयोध्यागमनं नाम सप्तविंशतितमः सर्गः ॥ २७ ॥

करता है वा एक भावसे जानकीका भजन करता है, इस पवित्र ग्रन्थको सुनता वा पढता है वह फिर माताके गर्भमें स्थित नहीं होता, मुक्त होजाता है ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अद्भुतोत्तरकाण्डे मुरादाबादनिवासी पं० सुखानन्दमिश्रात्मज पंडित ज्वालाप्रसाद मिश्रकृतभाषाटीकायां श्रीसीतारामयोरयोध्यागमनं नाम सप्तविंशतितमः सर्गः ॥ २७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्लोकसंख्या १३५३.

वाल्मीकि नारद ऋषी, महावीर शिर नाय ॥ बूझी कुलगुरु शिव शिवा, गणपति गिरा मनाय ॥ १ ॥
रामचरित भाषा कियो, द्विज ज्वालापरसाद ॥ पढहिं सुनहिं सुख लहहिं जन, ऋषियनको संवाद ॥ २ ॥
राम लषण सीता भरत, रिपुहन पवनकुमार ॥ प्रेमसहित वन्दहुँ चरण, हितकृत वारंवार ॥ ३ ॥
कृपादृष्टिकी वृष्टि जिमि, करत हमारी ओर ॥ तैसिय कीजै नित्य प्रति, दयादृगनकी कोर ॥ ४ ॥
संवत गुणशरअंकविधु, भाद्रशुक्ल रविवार ॥ सुखदायक तिथि सप्तमी, पूरचो ग्रंथविचार ॥ ५ ॥



इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मज-क्षेमराज-श्रेष्ठिना, स्वकीयें-"श्रीवेङ्कटेश्वर"
(स्टीम्) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम्।
सम्वत् १९९४, शकाब्दाः १८५९.

पुस्तक मिलनेका ठिकाना—

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम्-प्रेस,
बंबई.

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम्-प्रेस,
कल्याण-बंबई.

## विद्वुषामभ्यर्थना।

अत्रास्माकं मुद्रणालय ऋगादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोप-पुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-सांख्य-मीमांसादिशास्त्रीयग्रन्थाः काव्य-नाटक-चम्पू-प्रभृतयो ग्रन्थाः सहस्रनामाद्यनेकस्तोत्रग्रन्था विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनो-हरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः।

अधिकमस्मदीयसूचीपत्रेण "श्रीवेङ्कटेश्वरसमाचार" पत्रप्रापणद्वारा च ज्ञेयमिति शम्।

पुस्तक मिलनेका ठिकाना-

क्षेमराज-श्रीकृष्णदास "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालयाध्यक्षः-मुंबई.

तथा-गंगाविष्णु-श्रीकृष्णदास "लक्ष्मीवेंकटेश्वर" स्टीम्-मुद्रणालयाध्यक्षः-कल्याण-मुम्बई.

